# लिङ्गानुशासनम्

https://sa.wikisource.org/s/1761

पाणिनीयम् लिङ्गानुशासनम्

---

**अथ स्त्र्यधिकारः**

001 लिङ्गम् ।

002 स्त्री ।

003 ऋकारान्ताः मातृ दुहितृ स्वसृ पोतृ ननान्दरः ।

004 अन्यू प्रत्ययान्तः धातुः । प्अनि(उ 2.102), ऊ(उणा.1.81) प्रत्ययान्तः

005 अशनि भरण्यरणयः पुंसि च ।

006 मिन्यन्तः । प्मि(उणा.4.43), नि(उणा.4.48) प्रत्ययान्तः

007 वह्नि वृष्ण्यग्नयः पुंसि ।

008 श्रोणि योन्यूर्मयः पुंसि च ।

009 क्तिन्नन्तः । ।

010 ईकारान्तश्च । प्ई(उणा.3.158) प्रत्ययान्तः ।

011 ऊङाबन्तश्च । प्ऊङ्(4.1.66) आप् (उ डाप्, चाप्, टाप्) प्रत्ययान्तः ।

012 य्वन्तमेकाक्षरम् । प्ई, ऊ कारान्तम्

013 विंशत्यादिः आनवतेः ।

014 दुन्दुभिः अक्षेषु ।

015 नाभिरक्षत्रिये ।

016 उभावन्यत्र पुंसि ।

017 तलन्तः । प्तल्(5.1.119) प्रत्ययान्तःफ् ।

018 भूमि विद्युत्सरिल्लता वनिताभिधानानि । ।

019 यादः नपुंसकम् ।

020 भाः स्रुक्स्राग्दिगुष्णिगुपानहः ।

021 स्थूणोर्णे नपुंसके च ।

022 गृह शशाभ्याम् क्लीबे ।

023 प्रावृड्विप्रुडØट्तृड्विट्त्विषः ।

024 दर्वि विदि वेदि खनि शान्यश्रि वेशि कृष्योषधि कट¬ङ्गुलयः । प्पक्षे ङीप्।

025 तिथि नाडि रुचि वीचि नालि धूलि किकि केलिच्छवि रात्र्यादयः । । प्आदयः

026 शष्कुलि राजि कुट¬शनि वर्ति भ्रुकुटि त्रुटि वलि पङ्क्तयः ।

027 प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः ।

028 आशीर्धूःपूर्गीर्द्वारः ।

029 अप्सुमनस्समास्सिकतावर्षाणाम् बहुत्वम् च ।

030 स्रुक्त्वग्ज्योग्वाग्यवागू नौ स्फिजः ।

031 तृटि सीमा संबध्याः ।

032 चुल्लि वेणि खार्यश्च । ।

033 तारा धारा ज्योत्स्नादयश्च । प्आदयः।

034 शलाका स्त्रियाम् नित्यम् ।

इति स्त्र्यधिकारः ।।

---

**अथ पुल्लिङ्गाधिकारः**

035 पुमान् ।

036 घञबन्तः । प्घञ्(3.3.16-18), अप्( ) प्रत्ययान्तः झ्भावार्थ एवटफ् ।

037 घाजन्तश्च । प्घ( ), अच्( ) प्रत्ययान्तः।

038 भय लिङ्ग भग पदानि नपुंसके ।

039 नङन्तः । प्नङ्( ) प्रत्ययान्तः ।

040 याच्ञा स्त्रियाम् ।

041 क्यन्तः घुः । प्कि( ) प्रत्ययान्तः - घु(1.1.20 ।

042 इषुधिः स्त्री च ।

043 देवासुरात्म स्वर्ग गिरि समुद्र नख केश दन्त स्तन भुज कण्ठ खड्ग शर पङ्काभिधानानि । ।

044 त्रिविष्टप त्रिभुवने नपुंसके ।

045 द्यौः स्त्रियाम् ।

046 इषु बाहू स्त्रियाम् च ।

047 बाण काण्डौ नपुंसके च ।

048 नान्तः । ।

049 क्रतु पुरुष कपोल गुल्फ मेघाभिधानानि । ।

050 अभ्रम् नपुंसकम् ।

051 उकारान्तः । ।

052 धेनु रज्जु कुहू सरयु तनु रेणु प्रियङ्गवः स्त्रियाम् ।

053 समासे रज्जुः पुंसि च ।

054 श्मश्रु जानु वसु स्वादु अश्रु जतु त्रपु तालूनि नपुंसके ।

055 वसु चार्थ वाचि ।

056 मद्गु मधु सीधु शीधु सानु कमण्डलूनि नपुंसके च ।

057 रुत्वन्तः । प्रु(उणा.4.101), तु(उणा.1.69) प्रत्ययान्तः ।

058 दारु कशेरु जतु वस्तु मस्तूनि नपुंसके ।

059 सक्तुः नपुंसके च ।

060 प्राग्रश्मेः अकारान्तः ।।

061 कोपधः ।।

062 चिबुक शालूक प्रातिपदिकांशुकोल्मुकानि नपुंसके ।

063 कण्टकानीक सरक मोदक चषक मस्तक पुस्तक तडाक निष्क शुष्क वर्चस्क पिनाक भाण्डक पिण्डक कटक शण्डक पिटक तालक फलक पुलाकानि नपुंसके च ।

064 टोपधः ।।

065 किरीट मुकुट ललाट वट विट शृङ्गाट कराट लोष्टानि नपुंसके ।

066 कुट कूट कपट कवाट कर्पट नट निकट कीट कटानि नपुंसके च ।

067 णोपधः ।।

068 ऋण लवण पर्ण तोरण रणोष्णानि नपुंसके ।

069 कार्ष्णापण स्वर्ण सुवर्ण व्रण चरण वृषण विषाण चूर्ण तृणानि नपुंसके च ।

070 थोपधः ।।

071 काष्ठ पृष्ठ सि(रि)क्थोक्थानि नपुंसके ।

072 काष्ठा दिगर्था स्त्रियाम् ।

073 तीर्थ प्रोथ यूथ गाथानि नपुंसके च ।

074 नोपधः ।।

075 जघनाजिन तुहिन कानन वन वृजिन विपिन वेतन शासन सोपान मिथुन श्मशान रत्न निम्न चिह्नानि नपुंसके ।

076 मान यानाभिधान नलिन पुलिनोद्यान शयनासन स्थान चन्दनालान समान भवन वसन संभावन विभावन विमानानि नपुंसके च ।

077 पोपधः ।।

078 पाप रूपोडुप तल्प शिल्प पुष्प शष्प समीपान्तरीपाणि नपुंसके ।

079 शूर्प कुतप कुणप द्वीप विटपानि नपुंसके च ।

080 भोपधः ।।

081 तलभम् नपुंसकम् ।

082 जृम्भम् नपुंसके च ।

083 मोपधः ।।

084 रुक्म सिध्म युध्मेध्म गुल्माध्यात्म कुङ्कुमानि नपुंसके ।

085 संग्राम दाडिम कुसुमाश्रम क्षेम क्षौम होमोद्दामानि नपुंसके च ।

086 योपधः । ।

087 किसलय ह्रदयेन्द्रियोत्तरीयाणि नपुंसके ।

088 गोमय कषाय मलयान्वयाव्ययानि नपुंसके च ।

089 रोपधः । ।

090 द्वाराग्र स्फार तक्र वक्र वप्र क्षिप्र क्षुद्र वीर तीर दूर कृच्छ्र रन्ध्राश्र श्वभ्र भीर गभीर क्रूर विचित्र केयूर केदारोदराजस्र शरीर कन्दर मन्दार पञ्जराजर जठराजिर वैर चामर पुष्कर गह्वर कुहर कुटीर कुलीर चत्वर काश्मीर नीराम्बर शिशिर तन्त्र यन्त्र क्षत्र क्षेत्र मित्र कलत्र चित्र मूत्र सूत्र वक्त्र नेत्र गोत्राङ्गुलित्र भलत्र शस्त्र शास्त्र वस्त्र पत्र पात्र च्छत्राणि नपुंसके ।

091 शुक्रम् अदेवतायाम् ।

092 चक्र वज्रान्धकार सारावार पार क्षीर तोमर शृङ्गार भृङ्गार मन्दारोशीर तिमिर शिशिराणि नपुंसके च ।

093 षोपधः । ।

094 शिरीषर्जीषाम्बरीष पीयूष पुरीष किल्बिष कल्माषाणि नपुंसके ।

095 यूष करीष मिष विष वर्षाणि नपुंसके च ।

096 सोपधः । ।

097 पनस बिस बुस साहसानि नपुंसके ।

098 चमसांस रस निर्यासोपवास कार्पास वास भास कास कांस मांसानि नपुंसके च ।

099 कंसम् चाप्राणिनि ।

100 रश्मि दिवसाभिधानानि । ।

101 दीधितिः स्त्रियाम् ।

102 दिनाहनी नपुंसके ।

103 मानाभिधानानि । ।

104 द्रोणाढकौ नपुंसके च ।

105 खारी मानिके स्त्रियाम् ।

106 दाराक्षत लाजासूनाम् बहुत्वम् च ।

107 नाड¬पजनोपपदानि व्रणाङ्ग पदानि ।

108 मरुद्गरुत्तरद्दत्विजः ।

109 ऋषि राशि दृति ग्रन्थि क्रिमि ध्वनि बलि कौलि मौलि रवि कवि कपि मुनयः ।

110 ध्वज गज मुञ्ज पुञ्जाः ।

111 हस्त कुन्तान्त व्रात वात दूत धूर्त सूत चूत मुहूर्ताः ।

112 षण्ड मण्ड करण्ड भरण्ड वरण्ड तुण्ड गण्ड मुण्ड पाषण्ड शिखण्डाः ।

113 वंशांश पुरोडाशाः ।

114 ह्रद कन्द कुन्द बुद्बुद शब्दाः ।

115 अर्घ पथि मथ्यृभुक्षि स्तम्ब नितम्ब पूगाः ।

116 पल्लव पल्वल कफ रेफ शेफ कटाह निर्व्यूह मठ मणि तरङ्ग तुरङ्ग गन्ध स्कन्ध मृदङ्ग सङ्ग समुद्र पुङ्खाः ।

117 सारथ्यतिथि कुक्षि बस्ति पाण्यञ्जलयः ।

इति पुल्लिङ्गाधिकारः

---

**अथ नपुंसकाधिकारः**

118 नपुंसकम् ।

119 भावे ल्युडन्तः । ।

120 निष्ठा च । प्निष्ठा(1.1.26) ।

121 त्वष्यञौ तद्धितौ । त्स्व(5.1.119), ष्यञ्(5.1.123) प्रत्ययान्तः ।

122 कर्मणि च ब्राह्मणादि गुण वचनेभ्यः । (5.1.124) ।

123 यद्यढग्यगञण्वुञ्छाश्च भाव कर्मणि ।

प्यत्(5.1.125), य(.126), ढक्(.127), यक्(.128), अञ्(.129), अण्(.130), वुञ्(.132,3), छ(.135) प्रत्ययान्तः ।

124 अव्ययीभावः । (2.4.18) ।

125 द्वन्द्वैकत्वम् । (2.4.2) ।

126 अभाषायाम् हेमन्त शिशिरावहोरात्रे च । (2.4.28)

127 अनञ्कर्मधारय़स्तत्पुरुषः ।

128 अनल्पे छाया । (2.4.22) ।

129 राजा मनुष्य पूर्वा सभा ।

130 सुरा सेना छाया शाला निशाः स्त्रियाम् च । प्2.4.15फ् ।

131 शिष्टम् परवत् । ।

132 रात्राह्नाहाः पुंसि । (2.4.29) ।

133 अपथ पुण्याहे नपुंसके । (2.4.17,30)

134 संख्या पूर्वा रात्रिः । (2.1.52)

135 द्विगुः स्त्रियाम् च । (2.4.17) ।

136 इसुसन्तः । प्इस्(उणा.2.108), उस्(उणा.2.115) प्रत्ययान्तः ।

137 अर्चिः स्त्रियाम् च ।

138 छदिः स्त्रियामेव ।

139 मुख नयन लोह वन मांस रुधिर कार्मुक विवर जल हल धनान्नाभिधानानि । ।

140 सीरार्थौदनाः पुंसि ।

141 वक्त्र नेत्रारण्य गाण्डीवानि पुंसि च ।

142 अटवी स्त्रियाम् ।

143 लोपधः । ।

144 तूलोपल ताल कुसूल तरल कम्बल देवल वृषलाः पुंसि ।

145 शील मूल मङ्गल साल कमल तल मुसल कुण्डल पलल मृणाल वाल निगल पलाल बिडाल खिल शूलाः पुंसि च ।

146 शतादिः संख्या । ।

147 शतायुत प्रयुताः पुंसि च ।

148 लक्षा कोटिः स्त्रियाम् ।

149 शङ्कुः पुंसि ।

150 सहरुः क्वचित् ।

151 मन्द्व्यच्कः अकर्तरि । प्मन्( ) प्रत्ययान्तःफ् ।

152 ब्राह्नन् पुंसि च ।

153 नाम रोमणी नपुंसके ।

154 असन्तः द्व्यच्कः । प्अस्( ) प्रत्ययान्तः।

155 अप्सराः स्त्रियाम् ।

156 त्रान्तः । ।

157 यात्रा मात्रा भस्त्रा दंष्ट्रा वरत्राः स्त्रियामेव ।

158 भृत्रामित्र छात्र पुत्र मन्त्र वृत्र मेढ्रोष्ट्राः पुंसि ।

159 पत्र पात्र पवित्र सूत्र छत्राः पुंसि च ।

160 बल कुसुम शुल्ब पत्तन रणाभिधानानि । ।

161 पद्म कमलोत्पलानि पुंसि च ।

162 आहव संग्रामौ पुंसि ।

163 आजिः स्त्रियामेव ।

164 फल जातिः । ।

165 वृक्ष जातिः स्त्रियामेव । ।

166 वियज्जगत्सकृत् शकन् पृषत् शकृद्यकृदुदश्वितः ।

167 नवनीतावतानानृतामृत निमित्त वित्त चित्त पित्त व्रत रजत वृत्त पलितानि ।

168 श्राद्ध कुलिश दैव पीठ कुण्ड भाण्डाङ्काङ्गद दधि सक्थ्यक्ष्यास्यास्पदाकाश कण्व बीजानि ।

169 दैवम् पुंसि च ।

170 धान्याज्य सस्य रूप्य कुप्य पण्य वण्र्य धिष्ण्य हव्य कव्य काव्य सत्यापत्यामूल्य शिक्य कुड¬ मद्य हम्र्य तूर्य सैन्यानि ।

171 द्वन्द्व बर्ह दुःख बडिश पिच्छ बिम्ब कुटुम्ब कवच वर शर वृन्दारकाणि ।

172 अक्षमिन्द्रिये ।

इति नपुंसकाधिकारः ।।

**अथ स्त्रीपुंसाधिकारः**

173 स्त्रीपुंसयोः ।

174 गो मणि यष्टि मुष्टि पाटलि वस्ति शाल्मलि त्रुटि मसि मरीचयः ।

175 मृत्यु सीधु कर्कन्धु किष्कु कण्डु रेणवः ।

176 गुण वचनमुकारान्तम् नपुंसकम् च । ।

177 अपत्यार्थस्तद्धिते । ।

इति स्त्रीपुंसाधिकारः ।।

**अथ पुंनपुंसकाधिकारः**

178 पुंनपुंसकयोः ।

179 घृत भूत मुस्त क्ष्वेलितैरावत पुस्तक बुस्त लोहिताः ।

180 शृङ्गार्घ निदाघोद्यम शल्य दृढाः ।

181 व्रज कुञ्ज कुथ कूर्च प्रस्थ दर्पार्मा(र्भा)र्धर्च दर्भ पुच्छाः ।

182 कबन्धौषधायुधान्ताः ।

183 दण्ड मण्ड खण्ड शव सैन्धव पाश्र्वाकाश कुश कीशाङ्कुश कुलिशाः ।

184 गृह मेह देह पट्ट पटहाष्टापदाम्बुद ककुदाश्च ।

इति पुंनपुंसकाधिकारः ।।

---

185 अवशिष्ट लिङ्गम् ।

186 अव्ययम् कति युष्मदस्मदः । ।

187 ष्णान्ता संख्या । (शिष्टा परवत् । ) ।

188 गुण वचनम् च । ।

189 कृत्याश्च । (3.3.171) ।

190 करणाधिकरणयोल्र्युट् च । (3.3.117) ।

191 सर्वादीनि सर्वनामानि ।।

इति लिङ्गानुशासनम् समाप्तम् ।।